# तर्कसङ्ग्रहः/उद्देशप्रकरणम्

https://sa.wikisource.org/s/abk
< तर्कसङ्ग्रहः

## ॥मङ्गलम्॥

**॥निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।**
**॥बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः॥१॥**

**विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम्।**
**टीकां शिशुहितां कुर्वे तर्कसङ्ग्रहदीपिकाम्॥**

**चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताक_इष्टदेवतानमस्कारात्मकं मङ्गलं शिष्टशिक्षायै ग्रन्थतो निबन्ध्नंश्चिकीर्षितं प्रतिजानीते, निधायेति । ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति। मङ्गले कृतेऽपि कादम्बर्यादौ समाप्त्यदर्शनात्, मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनाच्च अन्वयव्यतिरेकाभ्यां व्यभिचारादिति चेत् न, कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः। किरणावल्यादौ ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः। ननु मङ्गलस्य (ग्रन्थादौ) कर्तव्यत्वे किं प्रमाणमिति चेत् न। शिष्टाचारानुमितश्रुतिरेव प्रमाणत्वात्। तथा हि मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वाद्दर्शादिवत्। भोजनादौ व्यभिचारवारणाय अलौकिकेति। रात्रिश्राद्धादौ व्यभिचारवारणाय अविगीतेति। शिष्टपदं स्पष्टार्थम्। न कुर्यान्निष्फलं कर्म इति जलताडनादेरपि निषिद्धत्वात्। तर्क्यन्ते प्रतिपाद्यन्ते इति तर्काः, द्रव्यादिपदार्थास्तेषां सङ्ग्रहः सङ्क्षेपेण स्वरूपकथनं क्रियत इत्यर्थः। कस्मै प्रयोजनायेत्यत आह, सुखबोधायेति। सुखेनानायासेन यो बोधः पदार्थज्ञानं तस्मा इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोऽयं ग्रन्थः क्रियत इत्यत आह, बालानामिति। तेषामतिविस्तृतत्वाद्बालानां बोधो न जायत इत्यर्थः। ग्रहणधारणपटुर्बालः न तु स्तनन्धयः। किम् कृत्वा क्रियत इत्यत आह, निधायेति। विश्वेशं जगन्नियन्तारं हृदि निधाय नितरां स्थापयित्वा सदा तद्ध्यानपरो भूत्वेत्यर्थः। गुरूणां विद्यागुरूणां, वन्दनं नमस्कारं, विधाय कृत्वेत्यर्थः॥**

## ॥उद्देशप्रकरणम्॥

**॥द्रव्यगुणकर्मसामान्यविशेषसमवायाऽभावाः सप्त पदार्थाः॥१॥**

**पदार्थान् विभजते द्रव्येति। पदस्यार्थः पदार्थः इति व्युत्पत्याभिधेयत्वं पदार्थसामान्यलक्षणम् (लभ्यते)। ननु विभागादेव सप्तत्वे सिद्धे सप्त (पद)ग्रहणं व्यर्थमिति चेत्, न अधिकसङ्ख्याव्यवच्छेदार्थकत्वात्। नन्वतिरिक्तः पदार्थः प्रमितो वा न वा। नाऽद्यः, प्रमितस्य निषेधायोगात्। न द्वितीयः, प्रतियोगोप्रमितिं विना निषेधानुपपत्तेरिति चेत्, न। पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थकत्वात् (सप्तग्रहण)। ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वमिति वक्तव्यम्। सप्तभिन्नस्याप्रसिद्धया कथं सप्तान्यतमत्वव्याप्तिनिश्चय इति चेत्, न। द्रव्यादिसप्तान्यतमत्वं नाम द्रव्यादिभेदसप्तकाभाववत्वम्। अतो दोषविरहात्। एवमग्रेऽपि द्रष्टव्यम्।**

**॥तत्र द्रव्याणि, पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥२॥**

**द्रव्यं (द्रव्याणि) विभजते तत्रेति। तत्र द्रव्यादिमध्ये। द्रव्याणि नवैवेत्यन्वयः। कानि तानि इत्यत आह पृथिवीति। ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणीति? तथा हि, नीलं तमश्चलतीत्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च तमसो द्रव्यत्वं तावत् सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावः, रूपवत्वात्। अत एव न वायौ, स्पर्शाभावात् सदागतिमत्वाभावाच्च। नापि तेजसि, भास्वररूपाभावात् उष्णस्पर्शाभावाच्च। नापि जले, शीतस्पर्शाभावात् नीलरूपवत्वाच्च। नापि पृथिव्यां, गन्धाभावात् स्पर्शरहितत्वाच्च। तस्मात्तमसो दशमद्रव्यमिति चेत्, न। तमसस्तेजोऽभावरूप्अत्वात्। तथा हि, तमो न रूपिद्रव्यमालोकासहकृतचक्षुर्ग्राह्यत्वादालोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात्। तस्मात् प्रौढप्रकाशकतेजस्सामान्याभावस्तमः, तत्र नीलं तमश्चलति इति प्रत्ययो भ्रमः। अतो नव द्रव्याणीति सिद्धम्। द्रव्यत्वजातिमत्वं गुणवत्वं वा द्रव्यसामान्यलक्षणम्। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा गोः कपिलत्वम्। अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः। यथा गोः शृङ्गित्वम्। लक्ष्यमात्रावृत्तित्वमसम्भवः। यथा गौरैकशफत्वम्। एतद्दूषणत्रयरहितधर्मो लक्षणम्। स एवासाधारनधर्मः इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम्। व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिरतस्तद्वारणाय तद्भिन्नं धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे तन्न देयम्। व्यावृत्तेरपि व्यवहारसाधनत्वात्। ननु**

**गुणवत्वं न द्रव्यलक्षणम्, आद्यक्षणावच्छिन्नघटे उत्पन्नविनष्टघटे चाव्याप्तेरिति चेत्, न। गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात्। नन्वेवमपि एकं रूपं रसात्पृथक् इति व्यवहाराद्रूपादावतिव्याप्तिरिति चेत्, न। एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात्॥**

**॥रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः चतुर्विंशतिगुणाः॥३॥**

**गुणान्विभजते रूपेति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। गुणत्वजातिमान्वा। ननु लघुत्वकठिनत्वमृदुत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिगुणा इति चेत्, न। लघुत्वस्य गुरुत्वाभावरूपत्वान्मृदुत्वकठिनत्वयोः अवयवसंयोगविशेषत्वात्।**

**॥ उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि॥४॥**

**कर्म विभजते उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म कर्मत्वजातिमद्वा। भ्रमणादीनामपि गमने अन्तर्भावान्न पञ्चत्वविरोधः।**

**॥ परमपरं चेति द्विविधं सामान्यम्॥५॥**

**सामान्यं विभजते परमिति। परमधिकदेशवृत्ति। अपरं न्यूनदेशवृत्ति। सामान्यादिचतुष्टये जातिर्नास्ति।**

**॥ नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव॥६॥**

**विशेषं विभजत्ए नित्येति। पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं च नित्यद्रव्याणि।**

**॥ समवायस्त्वेक एव॥७॥**

**समवायस्य भेदो नास्तीत्याह समवायस्त्विति।**

**॥ अभावश्चतुर्विधः- प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति॥८॥**

**अभावं विभजते प्रागभावेति।**

---

# तर्कसङ्ग्रहः/द्रव्यलक्षणप्रकरणम्

https://sa.wikisource.org/s/abl
< तर्कसङ्ग्रहः

## ॥द्रव्यलक्षणप्रकरणम्॥

**॥ तत्र गन्धवती पृथिवी। सा द्विविधा, नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणम्। तच्च नासाग्रवर्ति। विषयो मृत्पाषाणादिः॥९॥**

तत्रोद्देशक्रमानुसारात् प्रथमं पृथिव्या लक्षणमाह **तत्रेति**। नाम्ना पदार्थसङ्कीर्तनमुद्देशः। उद्देशक्रमे च सर्वत्रेच्छैवं नियामिका। ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः। न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम्। अवयवदन्धस्यैव तत्र प्रतीतिसम्भवेन चित्रगन्धानङ्गीकारात् किं चोत्पन्नविनष्टघटादावव्याप्तिरिति चेत् न। गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात्। ननु जलादावपि गन्धप्रतीतिरिति चेत् न। अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात्। ननु कालस्य सर्वाधारतया सर्वेषां लक्षणानां कालेऽतिव्याप्तिरिति चेत् न। सर्वाधारताप्रयोजकभिन्नसम्बन्धेन लक्षणत्वस्य विवक्षितत्वात्। पृथिवीं विभजते **सा द्विविधेति**। नित्यत्वं ध्वंसाप्रतियोगित्वम्। अनित्यत्वं ध्वंसप्रतियोगित्वम्। प्रकारान्तरेण विभजते **पुनरिति**। आत्मनो भोगायतनं शरीरम्। यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम्। सुखदुःखसाक्षात्कारो भोगः। **शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्**। शरीरेन्द्रियभिन्नो विषयः। एवं च गन्धवच्छरीरं पार्थिवशरीरम्, गन्धवदिन्द्रियं पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषयः इति तत्तल्लक्षणं बोध्यम्। पार्थिवशरीरं दर्शयति **शरीरमिति**। इन्द्रियं दर्शयति **इन्द्रियमिति**। गन्धग्राहकमिति प्रयोजनम्। घ्राणमिति संज्ञा। नासाग्रेत्याश्रयोक्तिः। एवमुत्तरत्र ज्ञेयम्। पार्थिवविषयं दर्शयति **मृत्पाषाणादीति**।

**॥ शीतस्पर्शवत्यः आपः। ता द्विविधाः, नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः कार्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः॥२॥**

अपां लक्षणमाह **शीतेति**। उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्वं विवक्षितन्। "शीतं शिलातलम्" इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः। अन्यत्सर्वं पूर्वरीत्या व्याख्येयम्।

**॥ उष्णस्पर्शवत् तेजः। तच्च द्विविधं, नित्यमनित्यं च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनः त्रिविधं शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति। विषयः चतुर्विधः, भौम-दिव्य-औदर्य-आकरजभेदात्। भौमं वह्न्यादिकम्। अभिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरौदर्यम्। आकरजं सुवर्णादि॥३॥**

तेजसो लक्षणमाह **उष्णस्पर्शवदिति**। "उष्णं जलम्" इति प्रतीतेस्तेजः संयोगनुविधायित्वान्नातिव्याप्तिः। विषयं विभजते **भौमेति**। ननु "सुवर्णं पार्थिवं" पीतत्वाद्गुरुत्वात् हरिद्रावत् इति चेत् न। अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृतादौ तन्नाशादर्शनेन च असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात्सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात्तेजसत्वसिद्धिः। तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः। तस्मात् सुवर्णं तैजसमिति सिद्शम्।

**॥ रूपरहितः स्पर्शवान् वायुः। स द्विविधः नित्यः अनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनः त्रिविधः शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकंत्वक् सर्वशरीरवर्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तः सञ्चारी वायुः प्राणः। स च एकोऽपि उपाधिभेदात् प्राणापानादिसंज्ञां लभते॥४॥**

वायुं लक्षयति **रूपरहितेति**। आकाशादावतिव्याप्तिवारणाय **स्पर्शवानिति**। पृथिव्यादावतिव्याप्तिवारणाय **रूपरहितेति**। प्राणस्य कुत्रान्तर्भाव इत्यत आह **शरीरेति**। **स च इति**। एक एव प्राणः स्थानभेदात्प्राणापानादिशब्दैः व्यवह्रियत इत्यर्थः। स्पर्शानुमेयो वायुः। तथा हि, योऽयं वायौ वाति सति अनुष्णाशीतस्पर्श उपलभ्यते स क्वचिदाश्रितः गुणत्वाद्रूपवत्। न जलतेजसी अनुष्णाशीतस्पर्शवत्वात्। न विभुचतुष्टयं सर्वत्रोपलब्धिप्रसङ्गात् न मनः परमाणुस्पर्शस्यातीन्द्रियत्वात्। तस्माद्यः प्रतीयमानस्पर्शाश्रयः स वायुः (एव)। ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवदिति चेत् न। उद्भूतरूपस्योपाधित्वात्। "यत्र द्रव्यत्वे सति बहिरिन्द्रियजन्यप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्वम्" इति साध्यव्यापकत्वम्। पक्षे साधनाव्यापकत्वम्। न चैवं तप्तवारिस्थतेजसोऽपि अप्रत्यक्षत्वापत्तिः इष्टत्वात्। तस्माद्रूपरहितत्वाद्वायुरप्रत्यक्षः। इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात्परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे

द्व्यणुकमुत्पद्यते। त्रिभिरेव द्व्यणुकस्त्र्यणुकमुत्पद्यते। एवं चतुरणुकादिक्रमेण महती पृथिवी; महत्य आपः; महत्तेजः; महान्वायुरुत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य सञ्जिहीर्षावशात् क्रियया परमाणुद्वयविभागे द्व्यणुकनाशः। इत्येवं पृथिव्यादिनाशः। असमवायिकारणनाशात् द्व्यणुकनाशः। समवायिकारणनाशात् त्र्यणुकनाश इति सम्प्रदायः सर्वत्रासमवायिकारणनाशात् द्रव्यनाश इति नवीनाः। किं परमाणुसद्भावे प्रमाणम्। उच्यते, जालसूर्यमरीचस्थं सर्वतः सूक्ष्मतमं यत् द्रव्यं उपलभ्यते तत्सावयवं चाक्षुषद्रव्यत्वात् घटवत्। त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वात्कपालवत्। यो द्व्यणुकावयवः स परमाणुः। स च नित्यः, तस्यापि कार्यत्वे अनवस्थाप्रसङ्गात्। सृष्टिप्रलयसद्भावे "धाता यथा पूर्वमकल्पयत्" इति श्रुतिरेव प्रमाणम्। "सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः। सर्वभावकार्यध्वंसो महाप्रलयः" इति विवेकः।

**॥ शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यञ्च॥५॥**

आकाशं लक्षयति **शब्दगुणकमिति**। नन्वाकाशमपि पृथिव्यादिवन्नाना, किं नेत्याह **तच्चैकमिति**। भेदे प्रमाणाभावादित्यर्थः। एकत्वादेव सर्वत्र शब्दोपलब्धेर्विभुत्वमङ्गीकर्तव्यमित्याह **विभ्विति**। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वं, मूर्तत्वं परिच्छिन्नपरिमाणवत्वं क्रियावत्वं वा। विभुत्वादेव आत्मवन्नित्यमित्याह **नित्यं चेति**

**॥ अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥६॥**

कालं लक्षयति **अतीतेति**। सर्वाधारः कालः सर्वकार्यनिमित्तकारणम्।

**॥ प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका विभ्वी नित्या च॥७॥**

दिशो लक्षणमाह **प्राचीति**। दिगपि कार्यमात्रनिमित्तकारणम्।

**॥ ज्ञानाधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा च। तत्रेश्वरः सर्वज्ञः परमात्मैक एव। जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥८॥**

आत्मनो लक्षणमाह **ज्ञानेति**। आत्मानं विभजते **स द्विविध इति**। परमात्मनो लक्षणमाह **तत्रेति**। नित्यज्ञानाधिकरणत्वमीश्वरत्वम्। नन्वीश्वरसद्भावे किं प्रमाणम्। न तावत्प्रत्यक्षम्। तद्धि बाह्यमान्तरं वा। नाद्यः अरूपिद्रव्यात्। न द्वितीयः आत्मसुखदुःखादिव्यतिरिक्तत्वात्। नाप्यनुमानं लिङ्गाभावादिति चेत् न। अङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवत् इत्यनुमानस्यैव प्रमाणत्वात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतोमत्वं कर्तृत्वम्। उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्षदर्शित्वात्सर्वज्ञत्वम्। "यः सर्वज्ञः सः सर्ववित्" इत्यागमोऽपि तत्र प्रमाणम्। जीवस्य लक्षणमाह **जीव इति**। सुखाद्याश्रयत्वं जीवलक्षणम्। ननु मनुष्योऽहं ब्राह्मणोऽहमित्यादौ सर्वत्राहंप्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेत् न। शरीरस्यात्मत्वे करपादादिनाशे शरीरनाशादात्मनोऽपि नाशप्रसङ्गात्। नापीन्द्रियाणामात्मत्वम्, "योऽहं घतमद्राक्षं सोऽहमिदानीं स्पृशामि" इत्यनुसन्धानाभावप्रसङ्गात्। अन्यानुभूतेऽर्थे अन्यस्यानुसन्धानायोगात्। तस्माद्देहेन्द्रियव्यतिरेको जीवः सुखदुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः। स च न परमाणुः सर्वशरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात्। न मध्यमपरिमाणवान् तथा सति अनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात्। तस्मान्नित्यो विभुर्जीवः।

**॥ सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च॥९॥**

मनसो लक्षणमाह सुखेति। स्पर्शरहितत्वे सति क्रियावत्वं मनसो लक्षणम्। तद्विभजते तच्चेति। एकैकस्यात्मनः एकैकं मन इत्यात्मनामनेकत्वान्मनसोऽप्यनेकत्वमित्यर्थः। ननु मनो विभु स्पर्शरहितत्वे सति द्रव्यत्वादाकाशादिवत्दिति चेत् न। मनसो विभुत्वे आत्ममनः संयोगस्याऽसमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गः। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्। तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्, पुरीतद्व्यतिरिक्तस्थले आत्ममनः संयोगस्य सर्वदा विद्यमानत्वाव्। अणुत्वे तु यदा मनः पुरीतत् प्रविशति तदा सुषुप्तिः यदा निस्सरति तदा ज्ञानोत्पत्तिरित्याणुत्वसिद्धिः।

---

# तर्कसङ्ग्रहः/गुणलक्षणप्रकरणम्

https://sa.wikisource.org/s/abm

< तर्कसङ्ग्रहः

## ॥गुणलक्षणप्रकरणम्॥

**॥ चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि॥१॥**

रूपं लक्षयति **चक्षुरिति**। सङ्ख्यादावतिव्याप्तिवारणाय मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय गुणपदम्। नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेत् न। रूपस्य व्याप्यवृत्तित्वनियमात्। ननु चित्रपटे अवयवरूपस्यैव प्रतीतिरिति चेत् न। रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात्। न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकं गौरवात्। तस्मात्पटस्य प्रत्यक्षत्वान्यथानुपपत्या चित्ररोपसिद्धिः। रूपस्याश्रयमाह **पृथिवीति**। आश्रयं विभज्य दर्शयति **तत्रेति**।

**॥ रसनग्राह्यो गुणो रसः। स च मधुराम्ललवणकटुकशायतिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव॥२॥**

**रसं लक्षयति रसनेति। रसत्वेऽतिव्याप्तिवारणाय गुणपदम्। रसस्याश्रयमाह पृथिवीति। आश्रयं विभज्य दर्शयति तत्रेति।**

**॥ घ्राणग्राह्यो गुणो गन्धः। स द्विविधः सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः॥३॥**

**गन्धं लक्षयति घ्राणेति। गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम्।**

**॥ त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्ति। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः॥४॥**

**स्पर्शं लक्षयति त्वगिति। स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम्। संयोगादावतिव्याप्तिवारणाय मात्रपदम्।**

**॥ रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्र अपाकजं नित्यमनित्यं च नित्यगतं नित्यम् अनित्यगतमनित्यम्॥९॥**

**पाकजमिति। पाकस्तेजः सयोगः। तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यत् इत्यर्थः। तत्र परमाणुष्वेव पाको न द्व्यणुकादौ। आमनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः। तत्र परमानवः समवायिकारणम्। तेजः संयोगोऽसमवायिकारणम्। अदृष्टादिकं निमित्तकारणम्। द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः। पूर्वघटस्य नाशं विनैव अवयविनि अवयवेषु च परमाणुपर्यन्तेषु युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्यत्र जलादवित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगतमिति। द्व्यणुकादिगतमित्यर्थः। रूपादिचतुष्टयं उद्भूतं प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः। तदभावोऽनुद्भूतत्वम्।**

**॥ एकत्वादिव्यवहारहेतुः सङ्ख्या। सा नवद्रव्यवृत्तिः एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्राऽनित्यमेव॥६॥**

**सङ्ख्यां लक्षयति एकेति।**

**॥ मानव्यवहारासाधारणकारणं परिमाणम्। नवद्रव्यवृत्तिः। तच्चतुर्विधम्। अणु महत् दीर्घं ह्रस्वं चेति॥७॥**

**परिमाणं लक्षयति मानेति। परिमाणं विभजते तच्चेति। भावप्रधानो निर्देशः। अणुत्वं, महत्त्वं, दीर्घत्वं, ह्रस्वत्वं चेत्यर्थः।**

**॥ पृथग्व्यवहारासाधारणकारणं पृथक्त्वम्। सर्वद्रव्यवृत्तिः॥८॥**

**पृथक्त्वं लक्षयति पृथगिति। इदमस्मात्पृथक् इति व्यवहारकारणं पृथक्त्वमित्यर्थः।**

**॥ संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः॥९॥**

संयोगं लक्षयति संयुक्तेति। इमौ संयुक्तौ इति व्यवहारहेतुरित्यर्थः। सङ्ख्यादिलक्षणे सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति विशेषणीयम्। संयोगो द्विविधः, कर्मजः संयोजश्चेति। आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः। द्वितीयो हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगः। अव्याप्यवृत्तिः संयोगः। स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम्।

॥ संयोगनाशको गुणो विभागः। सर्वद्रव्यवृत्तिः॥१०॥

विभागं लक्षयति संयोगेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय संयोगनाशक इति। विभागोऽपि द्विविधः, कर्मजः विभागजश्चेति। आद्यो हस्तपुस्तकविभागः। द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः।

॥ परापरव्यवहारासाधारणकारणे परत्वापरत्वे। पृथिव्यादिचतुष्टयमनोवृत्तिनी। ते द्विविधे दिक्कृते कालकृते च। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे कालकृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्॥११॥

परत्वापरत्वयोर्लक्षणमाह परापरेति। परव्यवहारासाधारणकारणं परत्वम्। अपरव्यवहारासाधारणकारणमपरत्वमित्यर्थः। ते विभजते ते द्विविधे इति। दिक्कृतयोरुदाहरणमाह दूरस्थ इति। कालकृते उदाहरति ज्येष्ठ इति।

॥ आद्यपतनासमवायिकारणं गुरुत्वम्। पृथिवीजलवृत्ति॥१२॥

गुरुत्वं लक्षयति आद्येति। द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय आद्येति।

॥ आद्यस्यन्दनासमवायिकारणं द्रवत्वम्। पृथिव्यप्तेजोवृत्ति। तद्द्विविधं, सांसिद्धिकं नैमित्तिकं च। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ॥१३॥

द्रवत्वं लक्षयति आद्येति। स्यन्दनं प्रस्रवणम्। तेजःसयोगजं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम्। पृथिव्यां नैमित्तिकमुदाहरति घृतादाविति। तेजसि तदाह सुवर्णादाविति।

॥ चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः॥१४॥

स्नेहं लक्षयति चूर्णेति। कालादावतिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय पिण्डीभावेति।

॥ श्रोत्रग्राह्यो गुणः शब्दः, आकाशमात्रवृत्तिः। स द्विविधः, ध्वन्यात्मकः वर्णात्मकश्च। तत्र ध्वन्यात्मकः भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः॥१५॥

शब्दं लक्षयति श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय गुणपदम्। रूपादावतिव्याप्तिवारणाय श्रोत्रेति। शब्दास्त्रिविधः - संयोगजः, विभागजः, शब्दजश्चेति। त्यत्र आद्यो भेरीदण्डसंयोगजन्यः। द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः। भेर्यादिदेशमारभ्य श्रोत्रदेशपर्यन्तं द्वितीयादिशब्दाः शब्दजाः।

॥ सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्। सा द्विविधा स्मृतिरनुभवश्च॥१६॥

बिद्धेर्लक्षणमाह सर्वव्यवहारेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय सर्वव्यवहार इति। जानामीत्यनुव्यवसायगम्यं ज्ञानमेव लक्षणमिति भावः। बुद्धिं विभजते सेति।

॥ संस्कारमात्रजन्यं ज्ञानं स्मृतिः॥१७॥

स्मृतेर्लक्षणमाह संस्कारेति। भावनाख्यः संस्कारः। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति। घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्यमिति।प्रत्यभिज्ञायाम् अतिव्याप्तिवारणाय मात्रपदम्।

॥ तद्भिन्नं ज्ञानमनुभवः। स द्विविधः, यथार्थोऽयथार्थश्च॥१७॥

अनुभवं लक्षयति तद्भिन्नमिति। स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः। अनुभवं विभजते स द्विविध इति।

॥ तद्वति तप्रकारकोऽनुभवो यथार्थः। यथा रजते इदं रजतमिति ज्ञानम्। सैव प्रमेच्युते॥१९॥

यथार्थानुभवस्य लक्षणमाह तद्वतीति। ननु घटे घटत्वमिति प्रमायामव्याप्तिः, घटत्वे घटाभावादिति चेत् न, यत्र ब्यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्धानुभवः इत्यर्थाद्घटत्वे घटसम्भन्धोऽस्तीति नाव्याप्तिः। सैवेति। यथार्थानुभव एव शास्त्रे प्रमेत्युच्यते इत्यर्थः।

॥ तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः। यथा शुक्ताविदं रजतमिति। सैव अप्रमा इत्युच्यते॥२०॥

**अयथार्थानुभवं लक्षयति तदभाववतीति। नन्विदं संयोगीति प्रमायामतिव्याप्तिरिति चेत् न। यदवच्छेदेन यत्सम्बन्धाभावास्तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात्। संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वान्नतिव्याप्तिः।**

**॥ यथार्थानुभवः चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात्॥२१॥**

**यथार्थानुभवं विभजते यथार्थेति।**

**॥ तत् करणमपि चतुर्विधं प्रत्यक्षानिमानोपमानशब्दभेदात्॥२२॥**

**प्रसङ्गात्प्रमाकरणं विभजते तत्करणमपीति। प्रमाकरणमित्यर्थः। प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम्।**

**॥ (व्यापारवद्) असाधारणं कारणं करणम्॥२३॥**

**करणलक्षणमाह असाधारणेति। दिक्कालादावतिव्याप्तिवारणाय असाधारणेति।**

**॥ कार्यनियतपूर्ववृत्ति कारणम्॥२४॥**

**कारणलक्षणमाह कार्येति। पूर्ववृत्तिकारणमित्युक्ते रासभादावतिव्याप्तिः स्यादतो नियतेति। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत् न, अनन्यथासिद्धत्वे सतीति विशेषणम्। अनन्यथासिद्धत्वमन्यथासिद्धिरहितत्वम्। अन्यथासिद्धिः त्रिविधा - येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम्। यथा तन्तुनां तन्तुरूपं तन्तुत्वं च पटं प्रति। अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव पटं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववतिर्न एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धम्। यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवञ्च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्।**

**॥ कार्यं प्रागभावप्रतियोगि॥२५॥**

**कार्यलक्षणमाह कार्यमिति।**

**॥ कारणं त्रिविधम् - समाय्यसमवायिनिमित्तभेदात्॥२६॥**

**कारणं विभजते कारणमिति।**

**॥ यत् समवेतं कार्यम् उत्पद्यते तत् समवायिकारणम्। यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः॥२७॥**

**समवायिकारणस्य लक्षणमाह यत्समवेतमिति। यस्मिन् समवेतमित्यर्थः। असमवायिकारणं लक्षयति कार्येणेति। कार्येणेत्येतदुदाहरति तन्तुसंयोग इति।**

**॥ कार्येण कारणेन वा सह एकस्मिन्नर्थे समवेतत्वे सति यत्कारणं तदसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य॥२८॥**

**कार्येण पटेन सह एकस्मिंस्तन्तौ समवेतत्वात्तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः। कारणेनेत्येतदुदाहरति तन्तुरूपमिति। कारणेन पटेन सह एकस्मिंस्तन्तौ समवेतत्वात्तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः।**

**॥ तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य॥२९॥**

**निमित्तकारणं लक्षयति तदुभयेति। समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः।**

**॥ तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्॥३०॥**

**करणलक्षणमुपसंहरति तदेतदिति।**

---

# तर्कसङ्ग्रहः/प्रत्यक्षनिरूपणम्

https://sa.wikisource.org/s/abn

< तर्कसङ्ग्रहः

## ॥अथ प्रत्यक्षनिरूपणम्॥

**॥ तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्॥१॥**

प्रत्यक्षलक्षणमाह **तत्रेति**। प्रमाणचतुष्टयमध्येत्यर्थः।

**॥ इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद्द्विविधं निर्विकल्पकं सविकल्पकं चेति। तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकं यथेदं किञ्चित्। सप्रकारकं ज्ञानं सविकल्पकं यथा डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयं, पाचकोऽयमिति॥२॥**

प्रत्यक्षज्ञानस्य लक्षणमाह **इन्द्रियेति**। इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः, तयोः सन्निकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः। तद्विभजते तद्द्विविविधमिति। निर्विकल्पकस्य लक्षणमाह **निष्प्रकारकमिति**। इशेषणविशेष्यसम्बन्धानवगाहिज्ञानमित्यर्थः। ननु निर्विकल्पके किं प्रमाणमिति चेत् न, गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं, विशिष्टज्ञानत्वात्, दण्डीति ज्ञानवत् इत्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पकत्वेऽनवस्थाप्रसङ्गान्निर्विकल्पकसिद्धिः। सविकल्पकं लक्षयति **सप्रकारकमिति**। नामजात्यादिविशेष्यविशेषणसम्भन्धावगाहिज्ञानमित्यर्थः। सविकल्पकमुदाहरति **यथेति**।

**॥ प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति॥३३॥**

इन्द्रियार्थसंनिकर्षं विभजते **प्रत्यक्षेति**।

**॥ चक्षुषा धटप्रत्यक्षजनने संयोगः सन्निकर्षः॥४॥**

संयोगसन्निकर्षमुदाहरति **चक्षुषेति**। द्रव्यप्रत्यक्षे सर्वत्र संयोगः संनिकर्षः। आत्मा मनसा संयुज्यते, मनः इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते इत्यर्थः।

**॥ घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः। चक्षुः संयुक्तः धटे रूपस्य समवायः॥५॥**

संयुक्तसमवायमुदाहरति **घटरूपेति**। तत्र युक्तिमाह **चक्षुःसंयुक्त इति**।

**॥ रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुः संयुक्ते घटे रूपं समवेतं, तत्र रूपत्वस्य समवायात्॥६॥**

संयुक्तसमवेतसमवायमुदाहरति **रूपत्वेति**।

**॥ श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः कर्णविवरवत्याकाशस्य श्रोत्रत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात्॥७॥**

समवायमुदाहरति **श्रोत्रेणेति**। तदुपपादयति **कर्णेति**। ननु दूरस्थशब्दस्य कथं श्रोत्रसम्बन्ध इति चेत् न, वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रेण सम्भन्धात्प्रत्यक्षसम्भवः।

**॥ शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्॥८॥**

समवेतसमवायमुदाहरति **शब्दत्वेति**।

**॥ अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, घटाभाववद्भूतलमित्यत्र चक्षुः संयुक्ते भूतले घटाभावस्य विशेषणत्वात्॥९॥**

विशेष्यणविशेषभावमुदाहरति **अभावेति**। तदुपपादयति **घटाभाववदिति** भूतले घटो नास्तीत्यत्र अभावस्य अभावस्य विशेष्यत्व द्रष्टव्यम्। एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम्। यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्रक्ष्यत, दर्शनाभावान्नास्तीति तर्कितप्रतियोगिसत्वविरोध्यनुपलब्धिसहकृतेन्द्रियेणैव अभावज्ञानोत्पत्तौअनुपलब्धेः प्रमाणान्तरत्वासम्भवात्।

अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुपलब्धेः कारणत्वायोगात्। विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव, नातिरिक्तः सम्बन्धः। प्रत्यक्षज्ञानमुपसंहरस्तस्य करणमाह **एवमिति**।

**॥ एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम्, तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्॥१०॥**

असाधारणकारणत्वादिन्दियं प्रत्यक्षज्ञानकरणमित्यर्थः। प्रत्यक्षप्रमाणमुपसंहरति **तस्मादिति**।

---

# तर्कसङ्ग्रहः/अनुमाननिरूपणम्

https://sa.wikisource.org/s/abo
< तर्कसङ्ग्रहः

## अथ अनुमाननिरूपणम्

**॥ अनुमितिकरणमनुमानम्॥१॥**

अनुमानं लक्षयति **अनुमितिकरणमिति**।

**॥ परामर्शजन्यं ज्ञानमनुमितिः॥२॥**

अनुमितिं लक्षयति **परामर्शेति**। ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः स्थाणुपुरुषसंशयानन्तरं पुरुषत्वव्याप्यकरादिमानयम् इति परामर्षे सति पुरुष एव इति प्रत्यक्षजननात्। न च तत्रानुमितिरेवेति वाच्यम्। पुरुषं साक्षात्करोमि इत्यनुव्यवसायिविरोधादिति चेत् न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात्। सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। साध्यसिद्धिरनुमितिप्रतिबन्धिका। सिद्धिसत्त्वेऽपि अनुमिनुयाम् इतीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका। ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत्सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्याप्यनुमितिकारणत्वम्।

**॥ व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः। तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः॥३॥**

परामर्शं लक्षयति **व्याप्तीति**। व्याप्तिविषयकं यत्पक्षधर्मताज्ञानं स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति **यथेति**। अनुमितिमभिनीय दर्शयति **तज्जन्यमिति**। परामर्शजन्यमित्यर्थः। व्याप्तिलक्षणमाह **यत्रेति**।

**॥ यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्ति॥४॥**

यत्र धूमस्तत्राग्निरिति व्याप्तेरभिनयः। साहचर्यनियमः इति लक्षणम्। साहचयं सामानाधिकरण्यं तस्य नियमः। हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः।

**॥ व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता॥५॥**

पक्षधर्मतास्वरूपमाह **व्याप्यस्येति**।

**॥ अनुमानं द्विविधं - स्वार्थं परार्थं च॥६॥**

अनुमानं विभजते **अनुमानमिति**।

**॥ तत्र स्वार्थं स्वानुमितिहेतुः, तथाहि, स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः, तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति यत्र यत्र धूमस्तत्र तत्राग्निरिति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते, अयमेव लिङ्गपरामर्शः इत्युच्यते। तस्माद् पर्वतो वह्निमानिति ज्ञानमनुमितिः उत्पद्यते। तदेतत् स्वार्थानुमानम्॥७॥**

स्वार्थानुमानं दर्शयति **स्वयमेवेति**। ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि वज्रमणौ व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेत् न। व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात्। व्यभिचारज्ञानं निश्चयः शङ्का च।तद्विरहः क्वचित्तर्कात्, क्वचित्स्वतः सिद्धः एव। धूमाग्न्योर्व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः। ननु सकलवह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति चेत् न। वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्यासकलवह्निधूमज्ञानसम्भवात्। **तस्मादिति**। लिङ्गपरामर्शादित्यर्थः।

**॥ यत्तु स्वयं धूमादग्निमनुमाय परंप्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत् परार्थानुमानम्। यथा पर्वतो वह्निमान्, धूमवत्वात्, यो यो धूमवान् स वह्निमान् यथा महानसः, तथा चायं, तस्मात्तथेति। अनेन प्रतिपादितात् लिङ्गात् परोऽप्यग्निं प्रतिपद्यते॥८॥**

परार्थानुमानमाह **यत्त्विति**। यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः। पञ्चावयववाक्यमुदाहरति **यथेति**।

**॥ प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनानि पञ्चावयवाः। पर्वतो वह्निमानिति प्रतिज्ञा। धूमवत्वात् इति हेतुः। यो यो धूमवान् स वह्निमान् यथा महानस इत्युदाहरणम्। तथा च अयमिति उपनयः। तस्मात्तथेति निगमनम्॥९॥**

अवयवस्वरूपमाह **प्रतिज्ञेति**। उदाहृतवाक्ये प्रतिज्ञादिविभागमाह **पर्वतो वह्निमानिति**॥ साध्यवत्तया पक्षवचनं प्रतिज्ञा। पञ्चम्यन्तं लिङ्गप्रतिपादकं हेतुः। व्याप्तिप्रतिपादकं उदाहरणम्। व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः। हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्। अबाधितत्वादिकं निगमनप्रयोजकम्।

**॥ स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणम्। तस्मात् लिङ्गपरामर्शोऽनुमानम्॥१०॥**

अनुमितिकरणमाह **स्वार्थेति**। ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्यः इति चेत् न, 'वह्निव्यप्यवानयम्' इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकता लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात्।लिङ्गं न कारणम्, अतीतादौव्यभिचारात्। 'व्यापारवत्कारणं करणम्' इति मते परामर्शद्वारा व्याप्तिज्ञानं करणम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। अनुमानमुपसंहरति **तस्मादिति**।

**॥ लिङ्गं त्रिविधम्। अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा वह्नौ साध्ये धूमवत्वम्। यत्र धूमस्तत्राग्निर्यथा महानस इत्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः॥११॥**

लिङ्गं विभजते **लिङ्गमिति**। अन्वयव्यतिरेकिणं लक्षयति **अन्वयेति**। हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः

**॥ अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा घटः अभिधेयः प्रमेयत्वात् पटवत्। अत्र प्रमेयत्वाभिधेयत्वयोः व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च॥१२॥**

केवलान्वयिनो लक्षणमाह **अन्वयेति**। केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि। (वृत्तिमत्) अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः।

**॥ व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि, यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्वात्। यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम्। न चेयं तथा। तस्मान्न तथेति। अत्र यद्गन्धवत् तदितरभिन्नम् इत्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्॥१३॥**

केवलव्यतिरेकिणो लक्षणमाह **व्यतिरेकेति**। तदुदाहरति **यथेति**। **नन्वितरभेदः प्रसिद्धो वा नवा। आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वे अन्वयित्वम्, असत्वे असाधारण्यम्। द्वितीये साध्यज्ञानाभावात्कथं तद्विशिष्टानुमितिः। विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात्प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेत् न। जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यांसाध्यते। तत्र त्रयोदशत्वावच्छिन्नभेदात्मकसाध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये। प्रत्येकाधिकरणप्रसिद्ध्या साध्यविशिश्ःटानुमितिः व्यतिरेकव्याप्तिनिरूपणं चेति।**

**॥ सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः॥१४॥**

**पक्षलक्षणमाह सन्दिग्धेति। ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः। तत्र वेदवाक्यैरत्मनो निश्चितत्वेन सन्देहाभावत्। किञ्च प्रत्यक्षेऽपि वह्नौ ययत्रेच्छयानुमितिस्तत्राव्याप्तिरिति चेत् न, उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात्।**

**॥ निश्चितसाध्यवान् सपक्षः, यथा तत्रैव महानसम्॥१५॥**

**सपक्षलक्षणमाह निश्चितेति।**

**॥ निश्चितसाध्याऽभाववान् विपक्षः। यथा तत्रैव महाह्रदः॥१६॥**

**विपक्षलक्षनमाह निश्चितेति।**

**॥ सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः॥१७॥**

**एवं सद्धेतून्निरूप्य असद्धेतून्निरूपयितुं विभजते सव्यभिचारेति। अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम्।**

**॥ सव्यभिचारः अनैकान्तिकः। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्॥१८॥**

**सव्यभिचारं विभजते स त्रिविध इति।**

**॥ तत्र साध्याभाववद्वृत्तिः साधारणण् अनैकान्तिकः, यथा पर्वतो वह्निमान् प्रमेयत्वात् इति। प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्॥ १९॥**

साधारणं लक्षयति तत्रेति। उदाहरति यथेति।

॥ सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिः असाधारणः। यथा शब्दो नित्यः शब्दत्वात् इति। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यवृत्तं शब्दमात्रवृत्तिः॥२०॥

असाधारणं लक्षयति सर्वेति।

॥ अन्वयव्यतिरेकदृष्टान्तरहितिऽनुपसंहारि। यथा सर्वमनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति॥२१॥

अनुपसंहारिणो लक्षणमाह अन्वयेति।

॥ साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाभावेनाऽनित्यत्वेन व्याप्तम्॥२२॥

विरुद्धं लक्षयति साध्येति।

॥ यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वात् घटवत्॥२३॥

सत्प्रतिपक्षं लक्षयति यस्येति।

॥ असिद्धस्त्रिविधः - आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति॥२४॥

असिद्धं विभजते असिद्ध इति।

॥ आश्रयासिद्धो यथा गगनारविन्दं सुरभि-अरविन्दत्वात् सरोजारविन्दवत्। अत्र गगब्नारविन्दमाश्रयः स च नास्त्येव॥२५॥

आश्रयासिद्धमुदाहरति गगनेति।

॥ स्वरूपासिद्धो यथा शब्दो गुणश्चाक्षुषत्वात्। अत्र चाक्षुषत्वं शब्दं नास्ति शब्दस्य श्रावणत्वात्॥२६॥

स्वरूपासिद्धमुद्दहरति यथेति।

॥ सोपाधिको हेतुः व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः। साध्यसमानाधिकरनान्त्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्।पर्वतो धूमवान्वह्निमत्वादित्यत्र आर्द्रेन्धनसंयोगः उपाधिः। तथाहि। यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता। यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोगः उपाधिः। सोपाधिकत्वात् वह्निमत्वं व्याप्यत्वासिद्धम्॥२७॥

व्याप्यत्वासिद्धस्य लक्षणमाह सोपाधिक इति। उपाधेर्लक्षणमाह साध्येति। उपाधिश्चतुर्विधः - केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्यः आद्रेन्धनसंयोगः। द्वितीयो यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्वम्। तृतीयो यथा - प्रागभावो विनाशी जव्यत्वादित्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्। चतुर्थो यथा - प्रागभावो विनाशी प्रमेयत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्।

॥ यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वह्निरनुष्णो द्रव्यत्वात् जलवत्। अत्रानुष्णत्वं साध्यं तदभाव-उष्णत्वं स्पर्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम्॥२८॥

बाधितस्य लक्षणमाह यस्येति। अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम्। इतरेषां तु परामर्शप्रतिबन्धकत्वम्। तत्रापि साधारणस्याव्यभिचाराभावरूपतया, विरुद्धस्य सामानाधिकरण्याभावतया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभावतया, असाधारणानुपसंहारिणोः व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम्, आश्रयासिद्धिस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम्। उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः। सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति प्राञ्चः। निग्रहस्थानान्तरमिति नवीनाः।

---

# तर्कसङ्ग्रहः/उपमाननिरूपणम्


< तर्कसङ्ग्रहः

## ॥अथ उपमाननिरूपणम्॥

**॥ उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्। अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः। तथा हि कश्चिद्गवयशब्दार्थमजानन् कुतश्चित् आरण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति। तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते॥१॥**

उपमानं लक्षयति **उपमितिकरणमिति**।

---

# तर्कसङ्ग्रहः/शब्दनिरूपणम्

https://sa.wikisource.org/s/abq
< तर्कसङ्ग्रहः

## अथ शब्दनिरूपणम्

**॥आप्तवाक्यं शब्दः। आप्तस्तु, यथार्थवक्ता। वाक्यं पदसमूहः। यथा गामानयेति। शक्तं पदम्। अस्मात्पदात् अयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः॥१॥**

शब्दं लक्षयति **आप्तेति**। आप्तं लक्षयति **आप्तस्त्विति**। वाक्यलक्षणमाह **वाक्यमिति**। पदलक्षणमाह **शक्तमिति**। **अर्थस्मृत्यनुकूलपदपदार्थसम्भन्धः शक्तिः**। सा च पदार्थान्तरमिति मीमांसकाः। तन्निरासार्थमाह **अस्मादिति**। डित्थादीनामिव घटादीनामपि सङ्केत एव शक्तिः न तु पदार्थान्तरमित्यर्थः। ननु गवादिपदानां जातावेव शक्तिः, विशेषणतया जातेः प्रथममुपस्थितत्वात्। व्यक्तिलाभस्तु आक्षेपादिति केचित्। तत् न, गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन, जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्। शक्तिग्रहश्च वृद्धव्यवहारेण। व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरम् मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानयगां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्य अश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते। ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यपरवाक्य एव व्युत्पत्तिर्नसिद्धपर इति चेत् न। 'काश्यां त्रिभुवनतिलको भूपतिरास्ते' इत्यादौ सिद्धेऽपि व्यवहारात्, 'विकसितपद्मे मधुकरस्तिष्ठति' इत्यादौ प्रसिद्धपदसमभिव्याहारात्सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च। लक्षणापि शब्दवृत्तिः। शक्यसम्बन्धो लक्षणा। गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते। सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावान्नानाशक्तिकल्पनम्। लक्षणा त्रिविधा - जहलक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा। यथा मञ्चाः क्रोशन्तीति। यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति। यथा छत्रिणो गच्छन्तीति। यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति। यथा तत्वमसीति। गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धस्वरूपा यथा अग्निर्माणवकः इति। व्यञ्जनापि शक्तिलक्षणान्तर्भूता, शब्दशक्तिमूला अर्थशक्तिमूला च। अनुमानादिना अन्यथासिद्धा। तात्पर्यानुपपत्तिर्लक्षणाबीजम्। तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम्। तात्पर्यज्ञानञ्च वाक्यार्थज्ञाने हेतुः नानार्थानुरोधात्। प्रकरणादिकं तात्पर्यग्राहकम्। द्वारमित्यादौ पिधेहीति शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वाच्छब्दस्यार्थमविज्ञाय शब्दाध्याहारसम्भवादर्थाध्याहार एव युक्त इति चेत् न। पदविशेषजन्यपदार्थोपस्थितेः शब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात्। पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः। समुदायशक्ती रूढिः। नियतपद्मत्वादिज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गात्। 'इतरान्विते शक्तिः' इति प्राभाकराः। अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न कल्पनीया इति गौतमीयाः।

**॥आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञानहेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् आकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं संनिधिः॥२॥**

**आकाङ्क्षएति**। आकाङ्क्षादिज्ञानमित्यर्थः। अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात्। आकाङ्क्षां लक्षयति **पदस्येति**। योग्यता लक्षणमाह **अर्थेति**। सन्निधिलक्षणमाह **पदानामिति**। अविलम्बेनपदार्थोपस्थितिः सन्निधिः। उच्चारणं तु तदुपयोगितयोक्तम्।

**॥आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणामाकाङ्क्षाविरहात्। अग्निना सिञ्चेदिति न प्रमाणं योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सांनिध्याभावात्॥३॥**

**गौरश्व इति**। घटकर्मत्वमित्यप्यनाकाङ्क्षोदाहरणं द्रष्टव्यम्।

**॥वाक्यं द्विविधम्। वैदिकं लौकिकं च। वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्॥४॥**

वाक्यं विभजते **वाक्यमिति**। वैदिकस्य विशेषमाह **वैदिकमीश्वरोक्तमिति**। ननु वेदस्यानादित्वात्कथमीश्वरोक्तमिति चेत् न। 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन पौर्षेयत्वसिद्धेः। न च स्मर्यमाणकर्तृकत्वमुपाधिः, गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्तृकत्वस्मरणेन साधनव्यापकत्वात्। 'तस्मात्तेपानात्त्रयो वेद अजायन्त' इति श्रुतेश्च। ननु वर्णा नित्याः, स एवायं गकार इति प्रत्यभिज्ञाबलात्। तथा च कथं वेदस्यानित्यत्वमिति चेत् न, 'उत्पन्नो गकरो विनष्टो हगकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात्, 'सोऽयं गकारः' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत्साजात्यावलम्बनत्वात्, वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्यत्वाच्च।

तस्मादीश्वरोक्ता वेदाः। मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया प्रामाण्यम्। स्मृतिमूलवाक्यानामिदानीमनध्ययनात्तन्मूलभूता काचिच्छखोत्सन्नेति कल्प्यते। ननु पठ्यमानवेदवाक्योत्सादनस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वान्नित्यानुमेयो वेदो मूलमिति चेत् न, तथा सति कदापि वर्णानामानुपूर्वीज्ञानासम्भवेन बोधकत्वासम्भवात्।

**॥वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं शब्दः॥५॥**

ननु एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात् मद्वाक्यवत् इत्यनुमानादेव संसर्गज्ञानसम्भवाच्छब्दो न प्रमाणान्तरमिति चेन्न। अनुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात्। नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भिङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्या रात्रिभोजनमर्थापत्या कल्पत इति चेन्न। 'देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात्' इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात्। शते पञ्चाशदिति सम्भवोऽप्यनुमानमेव। 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकशब्द एव। चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न प्रमाणान्तरम्। तस्मात्प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्यैव प्रमाणानि।

ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं परतो वेति विचार्यते। तत्र विप्रतिपत्तिः - ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा इति। अत्र विधिकोटिः स्वतस्त्वम्। निषेधकोटिः परतस्त्वम्। अनुमानादिग्राह्यत्वेन सिद्धसाधनवारणाय यावदिति। 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय - अप्रामाण्यग्राहकेति। इदं ज्ञानमप्रमा इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्यापि अप्रामाण्याग्राहकत्वाभावास्र्वरत्स्त्वं न स्यादतस्तदिति। तस्मिन्ग्राह्यप्रामाण्याश्रयेऽप्रामाण्याग्राहिकेत्यर्थः। उदाहृतस्थले व्यवसायाप्रामाण्यग्राहकस्याप्यनुव्यवसाये तग्राहकत्वात्स्वतस्त्वसिद्धिः। ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यवसायेन घटघतत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात् व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्। पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेत् न। स्वतःप्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्। अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात्स्वतोग्राह्यत्वाभावात्परतो ग्राह्यत्वमेव। तथाहि। प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति पूर्वोत्पन्नं जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्त्वात् यन्नैव तन्नैव यथा अप्रमा इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयय्वतिरेकिणापि गृह्यते। प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम्। प्रमासाधारणकारणं गुणः, अप्रमासाधारणकारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्विशष्यसंनिकर्षो गुणः। अनुमितौ व्यापकवति व्याप्यज्ञानम्। उपमितौ यथार्थसादृश्यज्ञानम्। शाब्दज्ञाने यथार्थयोग्यताज्ञानम्। इत्याद्यूहनीयम्। पुरोवर्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वादप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वमुत्पत्तौ परतस्त्वम्। ननु सर्वेषां ज्ञानानां यथार्थत्वादयथार्थज्ञानमेव नास्तीति। न च 'शुक्ताविदं रजतम्' इति ज्ञानात्प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्। रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेवप्रवृत्तिसम्भवात्। स्वतन्त्रोपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत् न। सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थि प्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात्।

---

# तर्कसङ्ग्रहः/अवशिष्टगुणनिरूपणम्

https://sa.wikisource.org/s/abt
< तर्कसङ्ग्रहः

## अथावशिष्टगुणनिरूपणम्

**॥अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात्॥१॥**

अयथार्थानुभवं विभजते **अयथार्थ** इति। स्वप्नस्य मानसविपर्ययरूपत्वान्न त्रैविध्यविरोधः।

**॥एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति॥२॥**

संशयलक्षणमाह **एकेति**। घटपटाविति समूहावलम्बनेऽतिव्याप्तिवारणाय एकेति। 'घटो द्रव्यम्' इत्यादावतिव्याप्तिवारणाय विरुद्धेति। घटत्वविरुद्धपटत्ववान् इत्यत्र अतिव्याप्तिवारणाय नानेति।

**॥मिथ्याज्ञानं विपर्ययः। यथा शुक्तौ इदं रजतमिति॥३॥**

विपर्ययलक्षणमाह **मिथ्येति**। तदभाववति तत्प्रकारकनिर्णय इत्यर्थः।

**॥व्याप्यारोपेण व्यापकारोपास्तर्कः, यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति॥४॥**

तर्कं लक्षयति **व्याप्येति**। यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद्भेदेन सङ्कीर्तनीयम्।

**॥स्मृतिरपि द्विविधा। यथार्थायथार्था च। प्रमाजन्या यथार्था। अप्रमाजन्याऽयथार्था॥५॥**

स्मृतिं विभजते **स्मृतिरिति**।

**॥सर्वेषामनुकूलतया वेदनीयं सुखम्॥६॥**

सुखं लक्षयति **सर्वेषामिति**। 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्। यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम्।

**॥सर्वेषां प्रतिकूलतया वेदनीयं दुःखम्॥७॥**

**॥इच्छा कामः। क्रोधो द्वेषः। कृतिः प्रयत्नः। विहितकर्मजन्यो धर्मः। निषिद्धकर्मान्यस्त्वधर्मः॥८॥**

**॥बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना द्विविधा। नित्या अनित्याश्च। नित्या ईश्वरस्य अनित्या जीवस्य॥९॥**

**॥संस्कारस्त्रिविधः। वेगो भावना स्थितिस्थापकश्चेति। वेगः पृथिवादिचतुष्टयमनोवृत्तिः। अनुभवजन्या स्मृतिहेतुर्भावना। आत्ममात्रवृत्तिः। अन्यथाकृतस्य पुनस्तदवस्थापकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः॥१०॥**

संस्कारं विभजते **संस्कार** इति। संस्कारत्वजातिमान्संस्कारः। वेगस्याश्रयमाह **वेग** इति। वेगत्वजातिमान्वेगः। भावनां लक्षयति **अनुभवेति**। अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतिरिति। आत्मादावतिव्याप्तिवारणाय अनुभवेति। स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम्। स्थितिस्थापकं लक्षयति **अन्यथेति**। सङ्ख्यादयोष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः। अन्ये रूपादयो विशेषगुणाः। द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमद्गुणत्वं विशेषगुणत्वम्।

---

# तर्कसङ्ग्रहः/कर्मादिलक्षणप्रकरणम्

https://sa.wikisource.org/s/abr
< तर्कसङ्ग्रहः

## ॥अथ कर्मादिलक्षणप्रकरणम्॥

**॥चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसंनिकृष्टसंयोगहेतुराकुञ्चनम्। विप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत् सर्वं गमनम्। पृथिव्यादिचतुष्टयमनोव्त्ति॥१॥**

कर्मणो लक्षणमाह **चलनेति**। उत्क्षेपणादीनां कार्यभेदमाह **ऊर्ध्वेति**। शरीरेति। वक्रतासम्पादकमाकुञ्चनम्। ऋजुतासम्पादकं प्रसारणमित्यर्थः।

**॥नित्यमेकमनेकानुगतं सामान्यं द्रव्यगुणकर्मवृत्ति। तद्विविधं पराऽपरभेदात्। परं सत्ता। अपरं द्रव्यत्वादिः॥२॥**

सामान्यं लक्षयति **नित्यमिति**। संयोगेऽतिव्याप्तिवारणाय नित्यमिति। जलपरमाणुगतरूपेऽतिव्याप्तिवारणाय एकेति। परमाणुपरिमाणादावतिव्याप्तिवारणाय अनेकेति। अनुगतत्वं समवेतत्वम्। तेन नाभावादवतिव्याप्तिः।

**॥नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥३॥**

विशेषं लक्षयति **नित्येति**।

**॥नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदपराऽश्रितमेवावतिष्ठते तावयुतसिद्धौ, यथा अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति॥४॥**

समवायं लक्षयति **नित्येति**। संयोगेऽतिव्याप्तिवारणाय नित्येति। आकाशादावतिव्याप्तिवारणाय संबन्धेति। अयुतसिद्धलक्षणमाह **ययोरिति**। 'नीलो घटः' इति विशिष्टप्रतीतिर्विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्, दण्डीति विशिष्टबुद्धिवत् इति समवायसिद्धिः। अवयवावयविनाविति। द्रव्यसमवायिकारणमवयवः जन्यद्रव्यमवयवि।

**॥अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य॥५॥**

प्रागभावं लक्षयति **अनादिरिति**। प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीति व्यवहारहेतुः प्रागभावः।

**॥सादिरन्तः प्रध्वंसः। उत्पत्यनन्तरं कार्यस्य॥६॥**

ध्वंसं लक्षयति **सादिरिति**। घटादावतिव्याप्तिवारणाय अनन्तेति। आकाशादावतिव्याप्तिवारणाय सादिरिति। प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिर्ध्वस्त इति व्यवहारहेतुः ध्वंसः।

**॥त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। यथा भूतले घटो नास्तीति॥७॥**

अत्यन्ताभावं लक्षयति **त्रैकालिकेति**। अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गेति। ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिकेति।

**॥तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः। यथा घटः पटो नेति॥८॥**

अन्योन्याभावं लक्षयति **तादात्म्येति**। प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरत्यन्तान्योन्याभावयोर्भिन्नत्वम्। केवलदेवदत्ताभावादण्ड्यभावप्रतीत्या विशिष्टाभावः, 'एकसत्वेऽपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगेन घटवति समवायेन घताभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावातिरिक्तः। एवमन्योन्याभावोऽपि। घटत्वेन पटो नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते। पटे घटत्वं नास्तीति तदर्थः। अतिरिक्तत्वे स केवलान्वयी। सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः। घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेः, घटापसरणे सति प्रतीतेः, भूतलघटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते। घतवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादेवात्यन्ताभावस्याप्रतीतिः। घटापसरणे तु संयोगध्वंसस्य सत्त्वात्प्रतीतिरिति। केवलाधिकरणेनैव नास्तीति

व्यवहारोपपत्तौ अभावो न पदार्थान्तरमिति गुरुः। तत् न। अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वत्। अभावाभावो भाव एव। नातिरिक्त, अनवस्थाप्रसङ्गात्। ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः। अभावाभावोऽतिरिक्त एव तृतीयाभावस्य प्रथमाभावरूपत्वान्नावस्थेति नवीनाः।

---

# तर्कसङ्ग्रहः/उपसंहारः



< तर्कसङ्ग्रहः

## उपसंहारः

**॥सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्थाः इति सिद्धम्॥९॥**

ननु "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायसूत्रे षोडशपदार्थानामुक्तत्वात्कथं सप्तैवेत्यत आह **सर्वेषामिति**। सर्वेषां सप्तस्वेवन्तर्भाव इत्यर्थः। 'आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम्। प्रवृत्तिधर्माधर्मौ। रागद्वेषमोहा दोषाः। राग इच्छा। द्वेषो मन्युः। मोहः शरीरादौ आत्मभ्रमः। प्रेत्यभावो मरणम्। फलं भोगः। अपवर्गो मोक्षः। स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः। प्रयोजनं सुखप्राप्तिः दुःखहानिश्च। दृष्टान्तो महानसादिः। प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः। निर्णयो निश्चयः। स च प्रमाणफलम्। तत्वबुभुत्सो कथा वादः। उभयसाधनवती विजिगीषुकथा जल्पः। स्वपक्षस्थापनाहीना अपरपक्षविदळनमात्रावसाना वितण्डा। कथा नाम नानावक्तृपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः। अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणं छलम्। असदुत्तरं जातिः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्यविशीनोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्याकार्यसमा जातयः। वादिनोऽपजयहेतुर्निग्रहस्थानम्। तच्च प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थकम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च। शेषं सुगमम्।

ननु करतलानलसंयोगे अत्यपि प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेत् न। प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्। कारणत्वस्यैव शक्तिपदार्थत्वात्। ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादधेयशक्तिरङ्गीकार्येति चेत् न। भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात्। स्वत्वमपि न पदार्थान्तरम् यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात्। तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति।

अथ विधिर्निरूप्यते। प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः। तत्प्रतिपादको लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्यताज्ञानं प्रवर्तकम्। न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले प्रवर्तकत्वात्। न चाननुगमः स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वादिति गुरवः। तत् न। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च नित्यनैमित्तिकस्थले इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः, तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्। तस्मात्कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः। ननु 'ज्योतोष्टोमेन स्वर्गकमो यजेत' इत्यत्र लिङा स्वर्गसाधनमपूर्वं कार्यं प्रतीयते। यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः। कार्यं कृतिसाध्यम्। कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति। 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयान्वेति। कार्यबोद्धा नियोज्यः। तेन 'ज्योतिष्टोमनामकयागविषयकं स्वर्गकामस्य कार्यम्' इति वाक्यार्थः सम्पद्यते। वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते। 'आरोग्यकामो भेषजपानं कुर्यात्' इत्यादिलौकिकलिङः कार्याकार्ये लक्षणा इति चेत् न। यागस्याप्ययोआग्यतानिश्चयाभावेन इष्टसाधनतया प्रतीत्यनन्तरं तन्निर्वाहार्थम् - अवान्तरव्यापारतयाऽपूर्वकल्पनात्। कीर्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः। लोकव्युत्पत्तिबलात्क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्, अख्याततत्वेन यत्नार्थकत्वम्। पचति पाकं करोतीति विवरणदर्शनात्, किं करोतीति प्रश्ने पचतीत्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वात्। रथे गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा। देवदत्तः पचति, देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्। किं तु तद्गतैकत्वादीनामेव। तयोराक्षेपादेव लाभः। प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः। उपसर्गाणां द्योतकत्वमेव न तत्र शक्तिः।

पदार्थतत्वज्ञानस्य परमप्रयोजनं मोक्षः। तथाहि 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निधिध्यासितव्यः' इति श्रुत्या श्रवणादीनाम् आत्मसाक्षात्कारहेतुत्वबोधनात् श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेर्वाक्यार्थानुसन्धानरूपमननसाध्यत्वात्। मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्। तदनन्तरं श्रुत्युपदिष्टयोगविधिना निधिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादावहमित्यभिमानरूपमिथ्याज्ञाननाशे दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावे जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसलक्षणमोक्षो जायते। ज्ञानमेव मोक्षसाधनम्। मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात्। 'तमेवं विदिवाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या साधनान्तरनिषेधाच्च। ननु 'तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने' इति कर्मणो मोक्षसाधनत्वस्मरणाज्ज्ञानकर्मणोः समुच्चय इति चेत् न। "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्। अभ्यासाच्च क्वचिज्ज्ञानात्कैवल्यं लभते नरः।" इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनाज्ज्ञानद्वारैव कर्मणो मिक्षसाधनत्वं न साक्षात्।

तस्मात्पदार्थतत्वज्ञानस्य मोक्षः परमप्रयोजनमिति सर्वं रमणीयम्॥ इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसङ्ग्रहदीपिका समाप्ता॥

**॥कणादन्यायमतयोर्बलव्युत्पत्तिसिद्धये।**

**॥अन्नम्भट्टेन विदुषा रचितस्तर्कसङ्ग्रहः॥२०॥**

**॥इति श्रीमहामहोपाध्याय-अन्नम्भट्टविरचित-तर्कसङ्ग्रहः समाप्तः॥**